# ॥ सरस्वती सूक्तं ॥

## (ऋग्वेद संहिता)

ॐ इयमददाद्रभसमृणच्युतं दिवोदासं वध्र्यश्वाय दाशुषे । या शश्वन्
तमाचखशदावसं पणिं ता ते दात्राणि तविषा सरस्वती ॥ १ ॥ इयं
शुष्मेभिर्बिसखा इवारुजत्सानु गिरीणां तविषेभिरूर्मिभिः । पारावतघ्नीमवसे
सुवृक्तिभिः सरस्वती मा विवासेमधीतिभिः ॥ २ ॥ सरस्वति देवनिदो नि बर्हय
प्रजां विश्वस्य बृसयस्य मायिनः । उत क्षितिभ्योऽवनीरविन्दो विषमेभ्यो अस्रवो
वाजिनीवति ॥ ३ ॥ प्रणो देवी सरस्वती वाजेभिर्वाजिनीवती । धीनामवित्र्यवतु
॥ ४ ॥

यस्त्वा देवि सरस्वत्युपब्रूते धने हिते । इन्द्रं न वृत्रतूर्ये ॥ ५ ॥ त्वं देवि
सरस्वत्यवा वाजेषु वाजिनि । रदा पूषेव नः सनिम् ॥ ६ ॥ उत स्या नः
सरस्वती घोरा हिरण्यवर्तिनिः । वृत्रघ्नी वष्टि सुष्टुतिम् ॥ ७ ॥ यस्या अनन्तो
अह्रुतस्त्वेषश्चरिष्णुरर्णवः । अमश्चरति रोरुवत् ॥ ८ ॥

सा नो विश्वा अति द्विषः स्वसृरन्या ऋतावरी । अतन्नहेव सूर्यः ॥ ९ ॥ उत नः
प्रिया प्रियासु सप्तस्वसा सुजुष्टा । सरस्वती स्तोम्या भूत् ॥ १० ॥ आपप्रुषी

पार्थिवान्युरु रजो अंतरिक्षम् । सरस्वती निदस्पातु ॥ ११ ॥ त्रिषधस्था
सप्तधातुः पञ्च जाता वर्धयन्ती । वाजेवाजे हव्याभूत ॥ १२ ॥

प्र या महिम्ना महिनासु चेकिते द्युम्नेभिरन्या अपसामपस्तमा । रथ इव बृहती
विभ्वने कृतोपस्तुत्या चिकितुषा सरस्वती ॥ १३ ॥ सरस्वत्यभि नो नेषि वस्यो
माप स्फरीः पयसा मा न आ धक् । जुषस्व नः सख्या वेश्या च मा त्वत्
क्षेत्राण्यरणानि गन्म ॥ १४ ॥ प्र क्षोदसा धायसा सस्र एषा सरस्वती
धरुणमायसी पूः । प्रबाबधाना रथ्येव याति विश्वा अपो महिना सिन्धुरन्याः ॥
१५ ॥ एकाचेतत् सरस्वती नदीनां शुचिर्यती गिरिभ्य आ समुद्रात् । रायश्चेतन्ती
भुवनस्य भूरेर्घृतं पयो दुदुहे नाहुषाय ॥ १६ ॥

स वावृधे नर्यो योषणासु वृषा शिशुर्वृषभो यज्ञियासु । स वाजिनं मघवद्भ्यो
दधाति वि सातये तन्वं मामृजीत ॥ १७ ॥ उत स्या नः सरस्वती जुषाणोप
श्रवत् सुभगा यज्ञे अस्मिन् । मितज्ञुभिर्नमस्यैरियाना राया युजा चिदुत्तरा
सखिभ्यः ॥ १८ ॥ इमा जुह्वाना युष्मदा नमोभिः प्रति स्तोमं सरस्वती जुषस्व
। तव शर्मन् प्रियतमे दधाना उप स्थेयाम शरणं न वृक्षम् ॥ १९ ॥ अयमु ते
सरस्वति वसिष्ठो द्वारावृतस्य सुभगे व्यावः । वर्ध शुभ्रे स्तुवते रासि वाजान् ,
यूयं पात स्वस्तिभिः सदा नः ॥ २० ॥

बृहदु गायिषे वचोऽसुर्या नदीनाम् । सरस्वतीमिन्महया सुवृक्तिभिः स्तोमैर् वसिष्ठ रोदसी ॥ २१ ॥ उभे यत्ते महिना शुभ्रे अन्धसी अधिक्षियन्ति पूरवः । सा नो बोध्यवित्री मरुत्सखा चोद राधो मघोनां ॥ २२ ॥ भद्रमिद् भद्रा कृणवत् सरस्वत्यकवारी चेतति वाजिनीवती । गृणाना जमदग्निवत् स्तुवाना च वसिष्ठवत् ॥ २३ ॥ जनीयन्तो न्वग्रवः पुत्रीयन्तः सुदानवः । सरस्वहन्तं हवामहे ॥ २४ ॥

ये ते सरस्व ऊर्मयो मधुमन्तो घृतश्चुतः । तेभिर्नोऽविता भव ॥ २५ ॥ पीपिवांसं सरस्वतः स्तनं यो विश्वदर्शतः । भक्षीमहि प्रजामिषम् ॥ २६ ॥ अम्बितमे नदीतमे देवितमे सरस्वति । अप्रशस्ता इव स्मसि प्रशस्तिमम्ब नस्कृधि ॥ २७ ॥ त्वे विश्वा सरस्वति श्रितायूंषि देव्याम् । शुनहोत्रेषु मत्स्व प्रजां देवि दिदिड्ढि नः ॥ २८ ॥

इमा ब्रह्म सरस्वति जुषस्व वाजिनीवति । या ते मन्म गृत्समदा ऋतावरि प्रिया देवेषु जुह्वति ॥ २९ ॥ पावका नः सरस्वती वाजेभिर्वाजिनीवती । यज्ञं वष्टु धियावसुः ॥ ३० ॥ चोदयित्री सूनृतानां चेतन्ती सुमतीनाम् । यज्ञं दधे सरस्वती ॥ ३१ ॥ महो अर्णः सरस्वती प्र चेतयति केतुना । धियो विश्वा वि राजति ॥ ३२ ॥

सरस्वतीं देवयन्तो हवन्ते सरस्वतीमध्वरे तायमाने । सरस्वतीं सुकृतो अह्वयन्त सरस्वती दाशुषे वार्यंदात् ॥ ३३ ॥ सरस्वति या सरथं ययाथ स्वधाभिर्देवि पितृभिर्मदन्ती ॥ आसद्यास्मिन् बर्हिषि मादयस्वानमीवा इष आ धेह्यस्मे ॥ ३४ ॥ सरस्वतीं यां पितरो हवन्ते दक्षिणा यज्ञमभिनक्षमाणाः । सहस्रार्घमिळो अत्र भागं रायस्पोषं यजमानेषु धेहि ॥ ३५ ॥ आ नो दिवो बृहतः पर्वतादा सरस्वती यजता गन्तु यज्ञम् । हवं देवी जुजुषाणा घृताची शग्मां नो वाचमुशती शृणोतु ॥ ३६ ॥

राकामहं सुहवां सुष्टुती हुवे शृणोतु नः सुभगा बोधतु त्मना । सीव्यत्वपः सूच्याच्छिद्यमानया ददातु वीरं शतदायमुक्थ्यम् ॥ ३७ ॥ यास्ते राके सुमतयः सुपेशसो याभिर्ददासि दाशुषे वसूनि । ताभिर्नो अद्य सुमना उपागहि सहस्रपोषं सुभगे रराणा ॥ ३८ ॥ सिनीवालि पृथुष्टुके या देवानामसि स्वसा । जुषस्व हव्यमाहुतं प्रजां देवि दिदिड्ढि नः ॥ ३९ ॥ या सुबाहुः स्वङ्गुरिः सुषूमा बहुसूवरी । तस्यै विश्पत्न्यै हविः सिनीवाल्यै जुहोतन ॥ ४० ॥ या गुङ्गूर्या सिनीवाली या राका या सरस्वती । इन्द्राणीमह्व ऊतये वरुणानीं स्वस्तये ॥ ४१ ॥

ॐ शांतिः शांतिः शांतिः ॥